भवति? वयोवचना ह्येते शब्दाः छागश्छागलो वस्तः—इति, तेन अश्वोऽपि वयोवचनो भविष्यति'—इति। उच्यते,—नैतदेवं, सत्यं वयोवचनः, अजापतिगतन्तु वयो वदितुम् शक्नोति, यथा शोणः—इति वर्णवचनः अश्वजातिगतं वर्णं वदति, न अन्यम्। तस्मात् 'रूपान्यत्वात् न' वयोमात्रवचनः, किन्तु 'जातिशब्दः स्यात्', जात्याश्रयं वयो वदेत्। अतश्छाग एव नियम्यते॥

सू. विकारो नोत्पत्तिकत्वात्* ॥ ४० ॥ (आ० नि० २) ॥

भा. इदमपि पदोत्तरम्,—इह अश्वादीनां विकारश्छागशब्दः, किञ्चिदत्र अश्वादीनाम् उच्चार्य्यते, न किञ्चित् अन्यदेव। तस्मात् अश्वोऽपि छागः—इति, 'न उत्पत्तिकत्वात्', औत्पत्तिको हि नामिनाम्नोः सम्बन्धः—इत्युक्तम् (१।१।३ सू०), न आख्याविकारः सम्भवति—इति। तस्मात् न अश्वश्छागः, अतः छाग एव उपादातव्यः—इति॥

सू. स नैमित्तिकः पशोर्गुणस्याचोदितत्वात् ॥ ४१ ॥ (आ० नि० ३) ॥

भा. पदोत्तरमेव इदं सूत्रम्। अथ कस्मात् न छिद्रनिमित्तः छागशब्दो भवति? एवं श्रूयते,—'सुषिरो वा एतर्हि पशुः यर्हि वपामुत्खिदन्ति'—इति। न—इत्युच्यते, छिद्रत्वस्य 'गुणस्य' 'पशोः' 'अचोदितत्वात्'; 'अव्यङ्गं पशुमालभेत'—इति हि चोद्यते। तस्मात् अच्छिद्रः पशुः। न च, अवयवप्रसिद्ध्या समुदायप्रसिद्धिर्बाध्यते,—इत्युक्तमेव। तस्मात् छाग एव उपादेयो न अश्वादयः—इति॥

---

* "विकार इति चेत् ॥ ४० ॥ नोत्पत्तिकत्वात् ॥ ४१ ॥" इत्येवं सूत्रद्वयरूपतया आ० सो० पुस्तके कं० सं० पुस्तके च पठितम्।

सू॰ जातेर्वा तत्प्रायवचनार्थवत्त्वाभ्याम् ॥ ४२ ॥ (सि॰) ॥

भा॰ वाशब्दः अवधारणायाम्। यस्मात् अवयवप्रसिद्ध्या समुदायप्रसिद्धिर्न बाध्यते, तस्मात् 'जातेः' एव छागशब्दो वाचकः, एवं समुदायस्य अर्थवत्ता अनुगृहीता भविष्यति—इति तत्प्रायवचनम् उपपद्यते, 'विश्वेषां देवानाम् उस्राणां छागानां मेषाणां वपानां मेदसोऽनुब्रूहि'—इति जातिप्राये वचनम् उपपद्यते; प्रायेणापि हि नियमः क्रियते, यथा, अश्वप्राये लिखितं दृष्ट्वा अश्वोऽयम्—इति बुद्धिर्भवति। तस्मात् छाग एव उपादातव्यः—इति। क्वत्वा-चिन्तायां* प्रयोजनं न वक्तव्यम् ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये षष्ठस्याध्यायस्य अष्टमः पादः ॥ अध्यायश्च समाप्तः ॥

समाप्तश्च पूर्व्वः षट्कः ॥

---

* शाखान्तरे विधौ एव "छागोऽग्नीषोमीयः" इति स्पष्टमुक्तत्वात् इयं क्वत्वा-चिन्ता।

